ௐ

# ईश्वरध्यानमञ्जरी

श्रीमत्परमहंस - परिव्राजकाचार्य
श्री शङ्करभगवत्पादविरचित
प्रपञ्चसारतः

*श्री काञ्चीकामकोटिपीठाधिप - जगद्गुरु*
*श्री शङ्कराचार्य श्री चरणानां*
*आदेशानुसारेण सङ्कलिता*

—o—

# ஈச்வர த்யான மஞ்ஜரீ

ஜகத்குரு ஸ்ரீமத் சங்கரபகவத் பாதர்களின்
பிரபஞ்சஸாரத்திலிருந்து தொகுத்தது.


## ஸ்ரீ காஞ்சீ காமகோடி பீடம்

ஸ்ரீமடம் ஸம்ஸ்தானம்
*1, சாலைத் தெரு, காஞ்சிபுரம் - 631 502*
விருஷ — வைகாசி
2001

உ

# ईश्वरध्यानमञ्जरी

श्री शङ्करभगवत्पादविरचित

प्रपञ्चसारतः

*सङ्कलिता*

—o—

# ஈச்வர த்யான மஞ்ஜரீ

ஜகத்குரு ஸ்ரீமத் சங்கரபகவத் பாதர்களின்

பிரபஞ்சஸாரத்திலிருந்து தொகுத்தது.


ஸ்ரீ காஞ்சீ காமகோடி பீடம்

ஸ்ரீமடம் ஸம்ஸ்தானம்

*1, சாலைத் தெரு, காஞ்சிபுரம் - 631 502*

விருஷ — வைகாசி

2001

॥ श्रीः ॥

श्री गुरुभ्यो नमः

# ईश्वरध्यानमञ्जरी

जगद्गुरु श्रीशङ्करभगवत्पादविरचितप्रपञ्चसारतः संकलिता

श्री गणपतये नमः

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

श्रुतिस्मृतिपुराणानां आलयं करुणालयम् ।
नमामि भगवत्पादशङ्करं लोकशङ्करम् ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

## १. श्री शारदा ஸ்ரீ சாரதா

अकचटतपयाद्यैः सप्तभिर्वर्णवर्गैः
विरचितमुखबाहापाद हृत्कुक्षिमध्या ।
सकलजगदधीशा शाश्वता विश्वयोनिः
वितरतु परिशुद्धिं चेतसः शारदा वः ॥ १ ॥

## २. मातृका सरस्वती - மாத்ருகாஸரஸ்வதீ

पञ्चाशद्वर्णभेदैः विहितवदनदोः पादयुक् कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थां
अच्छाकल्पां अतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

## ३. त्रिपुरा - த்ரிபுரா

आताम्रार्कायुताभां कलितशशिकलारञ्जितप्तां त्रिणेत्रां
देवीं पूर्णेन्दुवक्त्रां विधृतजपपटीपुस्तकाभीत्यभीष्टाम् ।
पीनोत्तुङ्गस्तनार्तां वलिलसितवलग्नामसृक्पङ्कराजन्-
मुण्डस्रङ्मण्डिताङ्गीं अरुणतरदुकूलानुलेपां नमामि ॥

## ४. वागीश्वरी - வாகீஶ்வரீ

अमलकमलसंस्था लेखिनीपुस्तकोद्यत्-
करयुगलसरोजा कुन्दमन्दारगौरा ।
धृतशशधरखण्डोल्लासिकोटीरचूडा
भवतु भवभयानां भङ्गिनी भारती वः ॥

## ५. सरस्वती - ஸரஸ்வதீ

हंसारूढा भसितहर हारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुलेखा ।
विद्या वीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥

## ६. भुवनेश्वरी - புவனேஶ்வரீ

उद्यद्भास्वत्समाभां विजितनवजपामिन्दुखण्डावनद्ध-
द्योतन्मौलिं त्रिणेत्रां विविधमणिलसत्कुण्डलां पद्मगां च ।
हारग्रैवेयकाञ्चीगुणमणिवलयाद्यैर्विचित्राम्बराढ्यां
अम्बां पाशाङ्कुशेष्टाभयकरकमलामम्बिकां तां नमामि ॥

भास्वद्रत्नौघमौलिस्फुरदमृतरुचो रञ्जयच्चारु रेखां
सम्यक्सन्तप्तकार्तस्वरकमलजपाभासुराभिः प्रभाभिः ।
विश्वाकाशावकाशं ज्वलयदशिशिरं धर्तृ पाशाङ्कुशेष्टा-
भीतीनां भङ्गितुङ्गस्तनमवतु जगन्मातुरार्कं वपुर्वः ॥

## ७. लक्ष्मीः - லக்ஷ்மீ

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयधृतकरकुम्भाद्भिरासिच्यमाना ।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रिये वः ॥

पद्मस्था पद्मनेत्रा कमलयुगवराभीतियुग्दोःसरोजा
देहोत्थाभिः प्रभाभिस्त्रिभुवनमखिलं भासुरा भासयन्ती ।
मुक्ताहाराभिरामोन्नतकुचकलशा रत्नमञ्जीरकाञ्ची-
ग्रैवेयोर्म्यङ्गदाढ्या धृतमणिमकुटा श्रेयसे श्रीर्भवेद्वः ॥

हस्तोद्यद्वसुपात्रपङ्कजयुगादर्शा स्फुरन्नूपुर-
ग्रैवेयाङ्गदहारकङ्कणमहामौलिज्वलत्कुण्डला ।
पद्मस्था परिचारिकापरिवृता शुक्लाङ्गरागांशुका
देवी दिव्यगणानता भवदघप्रध्वंसिनी स्याद्रमा ॥

अरुणकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीति युग्माम्बुजा च ।
मणिमकुटविचित्रालङ्कृताकल्पजातैः
भवतु भुवनमाता सन्ततं श्रीः श्रिये वः ॥

## ८. त्रिपुटादेवी - திரிபுடா தேவீ

आबद्धरत्नमकुटां मणिकुण्डलोद्यत्-
केयूरकोर्मिरशनाह्वयनूपुराढ्याम् ।
ध्याये धृताब्जयुगपाशकशाङ्कुशेक्षु-
चापां सपुष्पविशिखां नवहेमवर्णाम् ॥

## ९. भूदेवी - பூதேவீ

मुख्यांभोजे निविष्टारुणचरणतला श्यामलाङ्गी मनोज्ञा
चञ्चच्छाल्यग्रचुम्बच्छुकलसितकरा प्राप्तनीलोत्पला च ।
रत्नाकल्पाभिरामा मणिमयमकुटा चित्रवस्त्रा प्रसन्ना
दिश्याद्विश्वंभरा नः सततमभिमतं वल्लभा कैटभारेः ॥

## १०. त्वरिता - த்வரிதா

श्यामतनुमरुणपङ्कजचरणतलां वृषलनागमञ्जीराम् ।
स्वर्णांशुकपरिधानां वैश्याहिद्वन्द्वमेखलाकलिताम् ॥

तनुमध्यलतां पृथुलस्तनयुगलां करविराजदभयवराम् ।
शिखिपिञ्छनालवलयां गुञ्जाफलगुणितभूषणारुणिताम् ॥

नृपफणिकेयूरां तां गलविलसद्विविधमणियुताभरणाम् ।
द्विजनागविहितकुण्डलमण्डितगण्डद्वयी मुकुरशोभाम् ॥

शोणतराधरपल्लवविद्रुममणिभासुरां प्रसन्नां च ।
पूर्णशशिबिम्बवदनां अरुणायतलोचनत्रयीनलिनाम् ।
कुञ्चितकुन्तलविलसन्मकुटाघटिताहि वैरिपिञ्छयुताम् ॥

कैरातीं वनकुसुमोज्ज्वलां मयूरातपत्रकेतनिकाम् ।
सुरुचिरसिंहासनगां विभ्रमसमुदायमन्दिरां तरुणीम् ॥ (ध्याये)

## ११. वज्रप्रस्तारिणी - வஜ்ரப்ரஸ்தாரிணீ

इन्दुकलाकलितोज्ज्वलमौलिः
मारमदाकुलिता युगनेत्रा ।
शोणितसिन्धुतरङ्गितपोत-
द्योतितभानुदलाम्बुजसंस्था ॥

दोर्धृतदाडिमसायकपाशा
साङ्कुशचापकपालसमेता ।
शोणदुकूलविलेपनमाल्या
शोणतरा भवतोऽवतु देवी ॥

## १२. नित्यक्लिन्ना - நித்யக்லிந்நா

रक्ता रक्तांशुककुसुमविलेपादिका सेन्दुमौलिः
स्विद्यद्वक्त्रा मदविवशसमाघूर्णितत्रीक्षणा च ।
दोस्सत्पाशाङ्कुशयुतकपालाभया पद्मसंस्था
देवी पायादमितफलदा नित्यशः पार्वती वः ॥

## १३. दुर्गा - துர்க்கா

शंखारिचापशरभिन्नकरां त्रिणेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां ससुरसिद्धनुतां च दुर्गां
दूर्वानिभां दुरितगर्वहरां नमामि ॥

हेमप्रख्यां इन्दुखण्डात्तमौलिं
शङ्खारिष्टाभीति हस्तां त्रिणेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां
देवीं दुर्गां दिव्यरूपां नमामि ॥

अरिशङ्ख कृपाणखेटबाणान्
सधनुःशूलकतर्जनीर्दधाना ।
भवतां महिषोत्तमाङ्गसंस्था
नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥

## १४. शूलिनीदुर्गा - சூலினீ துர்கா

बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशान् कराब्जैः
मेघश्यामा किरीटोल्लिखितजलधरा भीषणा भूषणाढ्या ।
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी वः ॥

## १५. जातवेदो दुर्गा - ஜாதவேதோ துர்கா

भास्वद्विद्युत्करालाकुलहरिगलसंस्थारिशङ्खासिखेटे-
ष्वस्त्रासाख्यत्रिशूलानरिगणभयदां तर्जनीं चादधाना।
चर्मास्युद्घूर्णदोर्भिः प्रहरणनिपुणाभिर्वृता कन्यकाभिः
दद्यात्कार्शानवीष्टान् त्रिणयनलसिता कापि कात्यायनी वः।

करकमलविराजच्चक्रशङ्खासिशूला
परिलसितकिरीटा पातितानेकविद्या।
त्रिणयन लसिताङ्गी तिग्मरश्मिप्रकाशा-
पवनसखनिभाङ्गी पातु कात्यायनी वः ॥

## १६. अजपामूर्तिः - அஜபா மூர்த்தி

अरुणकनकवर्णं पद्मसंस्थं च गौरी-
हरनियमितचिह्नं सौम्यतानूनपातम्।
भवतु भवदभीष्टप्राप्तये पाशटङ्का-
भयवरदविचित्रं रूपमर्धाम्बिकेशम् ॥

## १७. अग्निः அக்கினி

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥

त्रिणयनमरुणस्राबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमंभोजसंस्थम्।

अभिमतवरशक्तिस्वस्तिकाभीति हस्तं
नमत कनकमालालङ्कृतांसं कृशानुम् ॥

शक्ति स्वस्तिक पाशान् साङ्कुशवरदाभयान् दधत् त्रिमुखः ।
मकुटादिविविधभूषोऽवताच्चिरं पावकः प्रसन्नो नः ॥

हैमाश्वत्थसुरद्रुमोदरभुवो निर्यान्तमश्वाकृतिं
वर्षन्तं धनधान्यरत्ननिचयान् रन्ध्रैः स्वकैः सन्ततम् ।
ज्वालापल्लवित स्वरोमविवरं भक्तार्तिसंभेदनं
वन्दे धर्मसुखार्थमोक्षफलदं दिव्याकृतिं पावकम् ॥

## १८. सूर्यः - ஸூர்யன்

अरुणसरोरुहसंस्थः त्रिदृगरुणोऽरुणसरोजयुगलधरः ।
कलिताभयवरदो द्युतिबिम्बोऽमितभूषणस्त्विनोऽवतु नः ॥

अरुणोऽरुणपङ्कजे निषण्णः कमलेऽभीतिवरौ करैर्दधानः।
स्वरुचाहितमण्डलस्त्रिणेत्रो रविराकल्पशताकुलोऽवताद्वः ॥

## १९. चन्द्रः - சந்திரன்

अमलकमलसंस्थः सुप्रसन्नाननेन्दुः
वरदकुमुदहस्तश्चारुहारादिभूषः ।
स्फटिकरजतवर्णो वाञ्छितप्राप्तये वो
भवतु भवदभीष्टोद्योतिताङ्कः शशाङ्कः ॥

## २०. महागणपतिः - மஹாகணபதி

मन्दाराद्यैः कल्पकवृक्षविशेषैर्विशिष्टतरफलदैः ।
शिशिरतरचतुराशेऽन्तर्बालातपचन्द्रिकाकुले च तले ॥

ऐक्षवजलनिधिलहरीकणजालकवाहिना च गन्धवहेन ।
संसेविते च सुरतरु सुमनःश्रितमधुपपक्षचलनपरेण ॥

रत्नमये मणिवज्रप्रवालफलपुष्पपल्लवस्य सतः ।
महतोऽधस्तादृतुभिः युगपत् संसेवितस्य कल्पतरोः ॥

सिंहमुखपादपीठगलिपिमयपद्मे त्रिषट्कोणोल्लसिते ।
आसीनस्त्वेकरदो बृहदुदरो दशभुजोऽरुणतनुश्च गजवदनः ॥

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरया श्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥

करपुष्करधृतकलशस्रुतमणिमुक्ताप्रवालवर्षेण ।
अविरतधारां विकिरन् परितः साधकसमग्रसंपत्त्यै ।
मदजललोलुपमधुकरमालां निजकर्णतालताडनया ।
निर्वासयन्मुहुर्मुहुः अमरैरसुरैश्च सेवितो युगपत् ॥

रक्तो रक्ताङ्ग रागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलिः
नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः ।

हस्ताग्राक्लृप्तपाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो
देवः पद्मासनो नो भवतु नतसुरो भूतये विघ्नराजः ॥

## २१. क्षिप्रप्रसादनगणपतिः - க்ஷிப்ரப்ரஸாதன கணபதி

धृतपाशाङ्कुशकल्पकलतिकास्वरदश्च बीजपूरयुतः ।
शशिशकलकलितमौलिः त्रिलोचनोऽरुणश्च गजवदनः ॥

भासुरभूषणदीप्तो बृहदुदरः पद्मविष्टरो ललितः ।
ध्येयोऽनायतदोःपदसरसिरुहः संपदे सदा मनुजैः ॥

## २२. कामदेवः - காமதேவன்

अरुणमरुणवासोमाल्यदामाङ्गरागं
स्वकरकलितपाशं साङ्कुशास्त्रेषुचापम् ।
मणिमयमकुटाद्यैर्दीप्तमाकल्पजातैः
अरुणनलिनसंस्थं चिन्तयेदङ्गयोनिम् ॥

## २३. श्रीकृष्णः - ஸ்ரீ கிருஷ்ணன்

अव्यान्मीलत्कलायद्युतिरहिरिपुपिञ्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधित ललितवपुर्गोपगोवृन्दवीतः ।
श्रीमद्वक्त्रारविन्द प्रतिहसितशशाङ्काकृतिः पीतवासाः
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥

## २४. विष्णुः - ஸ்ரீ விஷ்ணு

विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम् ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयमाशा-
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराजत्-
केयूरं कौस्तुभाभाशबलरुचिरहारं सपीताम्बरं च ।
नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं
वन्दे दोःसक्त चक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥

हरिमुज्ज्वल चक्रदराब्जगदा-
कुलदोःपरिघं सितपद्मगतम् ।
वलयाङ्गदहारकिरीटधरं
नवकुन्दरुचिं प्रणमामि सदा ॥

## २५. सुदर्शन नारायणः - ஸ்ரீ ஸுதர்ஶந நாராயணன்

अव्याद्भास्कर सप्रभाभिरखिला भाभिर्दिशो भासयन्
भीमाक्षः क्षरदट्टहास विकसद् दंष्ट्राग्रदीप्ताननः ।
दोर्भिश्चक्रदरौ गदाब्जमुसलास्त्रासींश्च पाशाङ्कुशौ
बिभ्रत्पिङ्ग शिरोरुहोऽथ भवंतश्चक्राभिधानो हरिः ॥

## २६. श्रीकरः विष्णुः - ஸ்ரீகரா விஷ்ணு

दुग्धाब्धिद्वीपवर्यप्रविलसितसुरोद्यानकल्पद्रुमाधो
भद्रांभोजन्मपीठोपरिगतविनतानन्दनस्कन्धसंस्थः ।
दोर्भिर्बिभ्रद्रथाङ्गं सदरमथ गदापङ्कजे स्वर्णवर्णो
भास्वन्मौलिर्विचित्राभरणपरिगतः स्याच्छ्रियै वो मुकुन्दः ॥

## २७. वराहः - வராஹா

जान्वोरापादमुद्यत्कनकमिव हिमप्रख्यमाजानु नाभेः
कण्ठादानाभि वह्निप्रभमथ शिरसश्चागलं नीलवर्णम् ।
मौलेर्व्योमाभमाङ्कं करलसदरिशङ्खासिखेटं गदाश-
क्त्याख्येष्टाभीतियुक्तं प्रणमत वसुधोल्लासिदंष्ट्रं वराहम् ॥

## २८. नृसिंहः - ந்ருஸிம்ஹா

जान्वोरासक्ततीक्ष्णस्वनख रुचिलसद्बाहुसंस्पृष्टकेशः
चक्रं शङ्खं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ।
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं दीप्तजिह्वं
दंष्ट्रोग्रं धूतकेशं वदनमपि वहन् पातु वो नारसिंहः ॥

उद्यद्भास्वत्सहस्रप्रभमशनिनिभत्रीक्षणैर्विक्षरन्तं
वह्नीनह्नाय विद्युत्ततिविततसटाभीषणं भूषणैश्च ।
दिव्यैरादीप्तदेहं निशितनखलसद्बाहुदण्डैरनेकैः
संभिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥

अव्यान्निर्व्याजरौद्राकृतिरभिविवृतास्योल्लसत्तीक्ष्णदंष्ट्रः
चक्रं शङ्खं च पाशाङ्कुशकुलिशगदादारणाख्यान्दधानः ।
रक्ताकारश्च नाभेरध उपरि सितो दिव्यभूषाविशेषः
देवोऽर्काग्नीन्दुनेत्रो निखिलसुखकरो नारसिंहश्चिरं वः ॥

## २९. विश्वरूपो विष्णुः - விஶ்வரூப விஷ்ணு

अग्नीषोमात्मकमरिगदाशार्ङ्गखड्गैः सशङ्खैः
उद्यद्बाहुं हलमुसलशूलैः सकुन्तैः सदण्डैः ।
शक्त्या पाशाङ्कुशकुलिशटङ्काग्निभिश्चार्कवह्नि-
द्योतद्वक्त्रांघ्रिकसरसिजं तप्तकार्तस्वराभम् ॥

विष्णुं भास्वत्किरीटं मणिमकुटकटीसूत्रकेयूरहार-
ग्रैवेयोर्म्यादिमुख्याभरणमणिगणोल्लासिदिव्याङ्गरागम् ।
विश्वाकाशावकाशप्रविततमयुतादित्यनीकाशमुद्यद्-
बाह्वग्र्व्यग्रनानायुधनिकरकरं विश्वरूपं नमामि ॥

## ३०. विष्णुपञ्जरदेवता - விஷ்ணுபஞ்ஜர தேவதா

नमो भगवते सर्वविष्णवे विश्वरूपिणे ।
वासुदेवाय चक्रादिसर्वायुधभृते नमः ॥

## ३१. शिवः - சிவபெருமான்

शूलाहीटङ्क घण्टासिसृणिकुलिशपाशाग्न्यभीतीर्दधानं
दोर्भिः शीतांशुखण्डप्रतिघटितजटाभारमौलिं त्रिणेत्रम् ।
नानाकल्पाभिरामापघनमभिमतार्थप्रदं सुप्रसन्नं
पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्वतीशं नमा॑ ॥

बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्रः
त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलोत्तुंगमौलिः ॥

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गावृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शम्भवे ॥

वन्दे हरं वरदशूलकपालहस्तं
साभीतिमद्रिसुतयोज्ज्वलदेहकान्तिम् ।
वामोरुपीठगतया निजवामहस्त-
न्यस्तारुणोत्पलरुचा परिरब्धदेहम् ॥

वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु-
न्यस्तारक्तोत्पलायाः स्तनविधृतिलसद्वामबाहुः प्रियायाः ।
सर्वाकल्पाभिरामो धृतपरशुमृगेष्टः करैः काञ्चनाभः
ध्येयः पद्मासनस्थः स्मरललिततनुः संपदे पार्वतीशः ॥

## ३२. दक्षिणामूर्तिः - தக்ஷிணாமூர்த்தி

मुद्रां भद्रार्थदात्रीं सपरशुहरिणां बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगवरसमाबद्धकक्ष्यो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटः क्षीरगौरस्त्रिणेत्रः
दद्यादाद्यैः शुकाद्यैर्मुनिभिरभिनुतो भावशुद्धिं भवो वः ॥

दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ।
ध्यानैकनिरताङ्गाय नमो रुद्राय शम्भवे ॥

## ३३. अघोररुद्रः - அகோர ருத்ரா

कालाभ्राभः कराग्रैः परशुडमरुकौ खड्गखेटौ च बाणे-
ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिणेत्रः ।
रक्ताकाराम्बरोऽहिप्रवरघटितगात्रोऽरिनागग्रहादीन्
खादन्निष्टार्थदायी भवदनभिमतच्छित्तये स्यादघोरः ॥

## ३४. मृत्युञ्जयः - ம்ருத்யுஞ்ஜயா

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा-
गलदमृतजलार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
स्वकरकलितमुद्रापाशवेदाक्षमालं
स्फटिकरजतमुक्तागौरमीशं नमामि ॥

## ३५. चिन्तामणिशिवः (अर्धनारीश्वरः) - சிந்தாமணி சிவன்

अहिशशधरगङ्गाबद्धतुङ्गसमौलिः
त्रिदशगणनताङ्घ्रिस्त्रीक्षणः स्त्रीविलासी ।
भुजगपरशुशूलान् खड्ग वह्नी कपालं
शरमपि धनुरीशो बिभ्रदव्याच्चिरं वः ॥

हावभावलसितार्धनारिकं भीषणार्धमथवा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं चिन्तये जपविधौ विभूतये ॥

## ३६. चण्डेश्वरः - சண்டேச்வரர்

अव्यात्कपर्दकलितेन्दुकरः करात्त-
शूलाक्षसूत्रककमण्डलुटङ्क ईशः ।
रक्ताभवर्णवसनोऽरुणपङ्कजस्थो
नेत्रत्रयोल्लसित वक्त्रसरोरुहो वः (नः)॥

## ३७. गायत्री - காயத்ரீ

मन्दाराह्वयरोचनाञ्जनजपाख्या(खा)भैर्मुखैरिन्दुमद्-
रत्नोद्यन्मकुटांशुभिस्तत चतुर्विंशार्णचित्रा तनुः ।
अम्भोजारिदराह्वयौ गुणकपालाख्ये च पाशाङ्कुशे-
ष्टाभीतीर्दधती भवेद्भवदभीष्टोत्तारिणी तारिणी ॥

### ३८. त्र्यम्बकः - த்ர்யம்பகர்

अच्छस्वच्छारविन्दस्थितिरुभयकराङ्कस्थितं पूर्णकुम्भं
द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ ।
द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलाबन्धुरे प्लावयन्तौ
देहं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं वः ॥

### ३९. सवितृजातवेदोदुर्गात्र्यम्बकाः
### ஸூர்யன் - துர்க்கை - த்ர்யம்பகர்

स्मर्तव्याखिललोकवर्ति सततं यज्जङ्गमस्थावरं
व्याप्तं येन च यत्प्रपञ्चविहितं मुक्तिश्च यत्सिद्धितः ।
यद्वा स्यात्प्रणवत्रिभेदगहनं श्रुत्या च यद्गीयते
तद्वः कांक्षितसिद्धयेऽस्तु परमं तेजस्त्रयोत्थं महः ॥

### ४०. संवादाग्निः - ஸம்வாதாக்னி

धवलनलिनराजच्चन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं साभयं च ।
सवरदममलेन्दुक्षीरगौरं त्रिणेत्रं
प्रणमत सुरवक्त्रं मंक्षु संवादयन्तम् ॥

### ४१. वरुणः - வருணன்

अच्छांशुकाभरणमाल्यविलेपनाढ्यः
पाशाङ्कुशाभयवरोद्यतदोस्सरोजः ।

स्वच्छारविन्दवसतिः सुसितः प्रसन्नो
भूयाद्विभूतिविधये वरुणश्चिरं वः ॥

## ४२. भद्रकाली - பத்ரகாளீ

सुरौद्रसितदंष्ट्रिका त्रिणयनोर्ध्वकेशोल्बणा
कपालपरशूल्लसड्डमरुका त्रिशूलाकुला ।
घनाघननिभा रणद्रुचिरकिंकिणीमालिका
भवद्विभवसिद्धये भवतु भद्रकाली चिरात् ॥

## ४३. प्राणशक्तिः - ப்ராண ஶக்தி

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यंकुशं पञ्च बाणान् ।
बिभ्राणासृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिस्वरूपा ॥

## ४४. पार्वती - பார்வதீ

असकलशशिराजन्मौलिराबद्धपाशा-
ङ्कुशरुचिरकराब्जा बन्धुजीवारुणाङ्गी ।
अमरनिकरवन्द्या त्रीक्षणा शोणलेपां-
शुककुसुमयुता स्यात्संपदे पार्वती वः ॥

## ४५. अन्नपूर्णा - அன்ன பூர்ணா

रुद्रताण्डवविलोकनलोलां भद्रवक्त्रनयनां भवकान्ताम् ।
अन्नदाननिरतां जननीं तां चिन्तयञ्जपतु चित्रदुकूलाम् ।।

## ४६. अश्वारूढा -அஶ்வாரூடா

अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना
दक्षेऽन्येनानयन्ती स्फुरिततनुलतापाशबद्धां स्वसाध्याम् ।
देवी नित्यप्रसन्नाननशशधरबिम्बा त्रिनेत्राभिरामा
दद्यादाद्यानवद्या प्रवरसुखफलप्राप्तिहृद्यां श्रियं वः ।।

## ४७. व्यासः - வியாஸர்

मुनिव्रातावीतं मुदितधियमम्भोदरुचिर-
द्युतिं व्याख्यामुद्राकलनविलसद्दक्षिणकरम् ।
परं जानौ कृत्वा दृढकलितकक्ष्ये कविवरं
समासीनं व्यासं स्मरत निरतं पुण्यचरितम् ।।

## मङ्गलम् - மங்களம்

यदाश्रया विप्रकृतिप्रभावतो
विभिन्नतारांशसमुत्थितौजसः ।
जगन्ति पुष्णन्ति रवीन्दुवह्नयो
नमोऽस्तु तस्मै परिपूर्णतेजसे ।।



श्रीशङ्करभगवत्पादकृता

# वागीश्वरीस्तुतिः

अमलकमलाधिवासिनि मनसो वैमल्यदायिनि मनोज्ञे ।
सुन्दरगात्रि सुशीले तव चरणाम्भोरुहं नमामि सदा ॥ १ ॥

अचलात्मजा च दुर्गा कमला त्रिपुरेति भेदिता जगति ।
या सा त्वमेव वाचामीश्वरि सर्वात्मना प्रसीद मम ॥ २ ॥

त्वच्चरणाम्भोरुहयोः प्रणामहीनः पुनर्द्विजातिरपि ।
भूयादनेडमूकस्त्वद्भक्तो भवति देवि सर्वज्ञः ॥ ३ ॥

मूलाधारमुखोद्गतबिसतन्तुनिभप्रभावतया ।
विधृतलिपिव्राताहितमुखकरचरणादिके प्रसीद मम ॥ ४ ॥

वर्णतनोऽमृतवर्णे नियतमनिर्वर्णितेऽपि योगीन्द्रैः ।
निर्णीतिकरणदूरे वर्णयितुं देवि देहि सामर्थ्यम् ॥ ५ ॥

ससुरासुरमौलिलसन्मणिप्रभादीपिताङ्घ्रियुगनलिने ।
सकलागमस्वरूपे सर्वेश्वरि संनिधिं विधेहि मयि ॥ ६ ॥

पुस्तकजपवटहस्ते वरदाभयचिह्नचारुबाहुलते ।
कर्पूरामलदेहे वागीश्वरि शोधयाशु मम चेतः ॥ ७ ॥

क्षौमाम्बरपरिधाने मुक्तामणिभूषणे मुदावासे ।
स्मितचन्द्रिकाविकासितमुखेन्दुबिम्बेऽम्बिके प्रसीद मम ॥ ८ ॥

विद्यारूपेऽविद्यानाशिनि विद्योतितेऽन्तरात्मविदाम् ।
गद्यैः सपद्यजातैराद्यैर्मुनिभिः स्तुते प्रसीद मम ॥ ९ ॥

त्रिमुखि त्रयीस्वरूपे त्रिपुरे त्रिदशाभिवन्दिताङ्घ्रियुगे ।
त्रीक्षणविलसितवक्त्रे त्रिमूर्तिमूलात्मिके प्रसीद मम ॥ १० ॥

वेदात्मिके निरुक्तज्योतिर्व्याकरणकल्पशिक्षाभिः ।
सच्छन्दोभिः संततक्लृप्तषडङ्गेन्द्रिये प्रसीद मम ॥ ११ ॥

त्वच्चरणसरसिजन्मस्थितिमहितधियां न लिप्यते दोषः ।
भगवति भक्तिमतस्त्वयि परमां परमेश्वरि प्रसीद मम ॥ १२ ॥

बोधात्मिके बुधानां हृदयाम्बुजचारुरङ्गनटनपरे ।
भगवति भवभङ्गकरीं भक्तिं भद्रार्थदे प्रसीद मम ॥ १३ ॥

वागीशीस्तवमिति यो जपार्चनाहवनवृत्तिषु प्रजपेत् ।
स तु विमलचित्तवृत्तिर्देहापदि नित्यशुद्धमेति पदम् ॥ १४ ॥

(प्रपञ्चसारतः)

—*—

श्रीशङ्करभगवत्पादकृता

# भुवनेश्वरीस्तुतिः

प्रसीद प्रपञ्चस्वरूपे प्रधाने
प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे ।
प्रणोतुं प्रभो प्रारभे प्राञ्जलिस्त्वां
प्रकृत्याप्रतर्क्ये प्रकामप्रवृत्ते ॥

स्तुतिर्वाक्यबद्धा पदात्मैव वाक्यं
पदं त्वक्षरात्माक्षरस्त्वं महेशि ।
ध्रुवं त्वां त्वमेवाक्षरैस्त्वन्मयैस्तो-
ष्यसि त्वन्मयी वाक्प्रवृत्तिर्यतः स्यात् ॥ २ ॥

अजाधोक्षजत्रीक्षणाश्चापि रूपं
परं नाभिजानन्ति मायामयं ते ।
स्तुवन्तीशि तां त्वाममी स्थूलरूपां
तदेतावदम्बेह युक्तं ममापि ॥ ३ ॥

नमस्ते समस्तेशि बिन्दुस्वरूपे
नमस्ते रवत्वेन तत्त्वाभिधाने ।
नमस्ते महत्त्वं प्रपन्ने प्रधाने
नमस्ते त्वहङ्कारतत्त्वस्वरूपे ॥ ४ ॥

नमः शब्दरूपे नमो व्योमरूपे
नमः स्पर्शरूपे नमो वायुरूपे ।
नमो रूपतेजोरसाम्भःस्वरूपे
नमस्तेऽस्तु गन्धात्मिके भूस्वरूपे ॥ ५ ॥

नमः श्रोत्रचर्माक्षिजिह्वाख्यनासा-
सवाक्पाणिपत्पायुसोपस्थरूपे ।
मनोबुद्ध्यहङ्कारचित्तस्वरूपे
विरूपे नमस्ते विभो विश्वरूपे ॥ ६ ॥

रवित्वेन भूत्वान्तरात्मा दधासि
प्रजाश्चन्द्रमस्त्वेन पुष्णासि भूयः ।
दधास्यग्निमूर्तिं वहन्त्याहुतं वा
महादेवि तेजस्त्रयं त्वंत्त एव ॥ ७ ॥

चतुर्वक्त्रयुक्ता लसद्धंसवाहा
रजः संश्रिता ब्रह्मसंज्ञां दधाना ।
जगत्सृष्टिकार्यं जगन्मातृभूते
परं तत्पदं ध्यायसीशि त्वमेव ॥ ८ ॥

विराजत्किरीटा लसच्चक्रशङ्खा
वहन्ती च नारायणाख्यां जगत्सु ।
गुणं सत्त्वमास्थाय विश्वस्थितिं यः
करोतीह सोंशोऽपि देवि त्वमेव ॥ ९ ॥

जटाबद्धचन्द्राहिगङ्गा त्रिणेत्रा
  जगत्संहरन्ती च कल्पावसाने।
तमः संश्रिता रुद्रसंज्ञां दधाना
  वहन्ती परश्वक्षमाले विभासि ॥ १० ॥

सचिन्ताक्षमाला सुधाकुम्भलेखा-
  धरा त्रीक्षणार्धेन्दुराजत्कपर्दा।
सुशुक्लांशुकाकल्पदेहा सरस्व-
  त्यपि त्वन्मयैवेशि वाचामधीशा ॥ ११ ॥

लसच्चक्रशङ्खा चलत्खड्गभीमा
  नदत्सिंहवाहा ज्वलत्तुङ्गमौलिः।
द्रवद्दैत्यवर्गा स्तुवत्सिद्धसङ्घा
  त्वमेवेशि दुर्गा विसर्गाविहीने ॥ १२ ॥

पुरारातिदेहार्धभागे भवानी
  गिरीन्द्रात्मजात्वेन यैषा विभासि।
महायोगिवन्द्या महेशासुनाथा
  महेश्यम्बिका तत्त्वतस्त्वन्मयैव ॥ १३ ॥

लसत्कौस्तुभोद्भासिते व्योमनीले
  वसन्तीं च वक्षःस्थले कैटभारेः।
जगद्वल्लभां सर्वलोकैकनाथां
  श्रियं तां महादेव्यहं त्वामवैमि ॥ १४ ॥

अजाद्रीड्गुहाब्जाक्षपोत्रीन्द्रकाणां
महाभैरवस्यापि चिह्नं वहन्त्यः ।
विभो मातरः सप्त तद्रूपरूपाः
स्फुरन्त्यस्त्वदंशा महादेवि ताश्च ॥ १५ ॥

समुद्यद्दिवाकृत्सहस्रप्रभासा
सदा सन्ततोशेषविश्वावकाशे ।
लसन्मौलिबद्धेन्दुरेखे सपाशा-
ङ्कुशाभीत्यभीष्टात्तहस्ते नमस्ते ॥ १६ ॥

प्रभाकीर्तिकान्तीन्दिरारात्रिसन्ध्या-
क्रियाशातमिस्राक्षुधाबुद्धिमेधाः ।
स्तुतिर्वाङ् मतिः सन्नतिः श्रीश्च शक्तिः
त्वमेवेशि येऽन्ये च शक्तिप्रभेदाः ॥ १७ ॥

हरेबिन्दुनादैः सशक्त्याख्यशान्तैः
नमस्तेऽस्तु भेदैः प्रभिन्नैरभिन्ने ।
सदा सप्तपाताललोकाचलाब्धि-
ग्रहद्वीपधातुस्वरादिस्वरूपे ॥ १८ ॥

नमस्ते नमस्ते समस्तस्वरूपे
समस्तेषु वस्तुष्वनुस्यूतशक्ते ।
अतिस्थूलसूक्ष्मस्वरूपे महेशि
स्मृते बोधरूपेऽप्यबोधस्वरूपे ॥ १९ ॥

मनोवृत्तिरस्तु स्मृतिस्ते समस्ता
तथा वाक्प्रवृत्तिः स्तुतिः स्यान्महेशि ।
शरीरप्रवृत्तिः प्रणामक्रिया स्यात्-
प्रसीद क्षमस्व प्रभो सन्ततं मे ॥ २० ॥

(प्रपञ्चसारतः)

—*—

श्री शङ्करभगवत्पादकृता

# शिवस्तुतिः

—*—

नमो विरिञ्चविष्णवीशभेदेन परमात्मने ।
सर्गसंस्थितिसंहारव्यावृत्तिव्यक्तवृत्तये ॥ १ ॥

नमश्चतुर्धा प्रोद्भूतभूतभूतात्मने भुवः ।
भूरिभारार्तिसंहर्त्रे भूतनाथाय शूलिने ॥ २ ॥

विश्वग्रासाय विलसत्कालकूटविषाशिने ।
तत्कलङ्काङ्कितग्रीवनीलकण्ठाय ते नमः ॥ ३ ॥

नमो ललाटनयनप्रोल्लसत्कृष्णवर्त्मने ।
ध्वस्तस्मरनिरस्ताधियोगिध्यातायु शम्भवे ॥ ४ ॥

नमो देहार्धकान्ताय दग्धदक्षाध्वराय च ।
चतुर्वर्गेष्वभीष्टार्थदायिने मायिनेऽणवे ॥ ५ ॥

स्थूलाय मूलभूताय शूलदारितविद्विषे ।
कालहन्त्रे नमश्चन्द्रखण्डमण्डितमौलये ॥ ६ ॥

विवाससे कपर्दान्तर्भ्रान्ताहिसरिदिन्दवे ।
देवदैत्यासुरेन्द्राणां मौलिघृष्टाङ्घ्रये नमः ॥ ७ ॥

भस्माभ्यक्ताय भक्तानां भुक्तिमुक्तिप्रदायिने ।
व्यक्ताव्यक्तस्वरूपाय शङ्कराय नमो नमः ॥ ८ ॥

नमोऽन्धकान्तकरिपवे पुरद्विषे
नमोऽस्तु ते द्विरदवराहभेदिने ।
विषोल्लसत्फणिकुलबद्धमूर्तये
नमः सदा वृषवरवाहनाय ते ॥ ९ ॥

वियन्मरुद्धुतवहवार्वसुन्धरा-
मखेशरव्यमृतमयूखमूर्तये ।
नमः सदा नरकभयावभेदिने
भवेह नो भवभयभङ्गकृद्विभो ॥ १० ॥

(प्रपञ्चसारतः)

—*—

श्रीशङ्करभगवत्पादकृता

# हरिस्तुतिः

प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने ।
तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम् ॥ १ ॥

अज प्रसीद भगवन्नमितद्युतिपञ्जर ।
अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥ २ ॥

स्वसंवेद्यस्वरूपास्मदानन्दात्मन्ननामय ।
अचिन्त्यसार विश्वात्मन्प्रसीदेश निरञ्जन ॥ ३ ॥

प्रसीद तुङ्ग तुङ्गानां प्रसीद शिव शोभन ।
प्रसीद स्पष्ट गम्भीर गम्भीराणां महाद्युते ॥ ४ ॥

प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामणोरणो ।
प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनाम् ॥ ५ ॥

गुरोर्गरीयः सर्वेश प्रसीदानन्य देहिनाम् ।
जय माधव मायात्मन् जय केशव केशिहन् ॥ ६ ॥

जय सुन्दर सौम्यात्मन् जय शाश्वत शङ्खभृत् ।
जय शार्ङ्गधर श्रीमन् जय नन्दकनन्दन ॥ ७ ॥

जय चक्रगदापाणे जयाजय्य जनार्दन ।
जय रत्नाकराबन्ध किरीटाक्रान्तमस्तक ॥ ८ ॥

जय पक्षिपतिच्छायानिरुद्धार्ककराकर ।
नमस्ते नरकाराते नमस्ते मधुसूदन ॥ ९ ॥

नमस्ते नलिनापाङ्ग नमस्ते नयनाञ्जन ।
नमः पापहरेशान नमः सर्वभयापह ॥ १० ॥

नमः संभृतसर्वात्मन्नमः संभृतकौस्तुभ ।
नमस्ते नयनातीत नमो विक्रान्तवाक्पथ ॥ ११ ॥

नमो विभिन्नज्ञेयांश नमः स्मृतिपथातिग ।
नमस्त्रिमूर्तिभेदेन सर्गस्थित्यन्तहेतवे ॥ १२ ॥

विष्णवे त्रिदशारातिजिष्णवे परमात्मने ।
चक्रभिन्नारिचक्राय चक्रिणे चक्रबन्धवे ॥ १३ ॥

विश्वाय विश्ववन्द्याय विश्वभूतात्मने नमः ।
नमोऽस्तु योगिध्येयाय नमोऽस्त्वध्यात्मरूपिणे ॥ ४ ॥

भुक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ।
मनोवाक्कायचेष्टाः स्युर्ध्यानस्तुतिनमस्क्रियाः ॥ १५ ॥

देवेश कर्म सर्वं मे भवेदाराधनं तव ।
विषयेष्वपि सङ्गो मे हुतं विष्णो तवाच्युत ॥ १६ ॥

(प्रपञ्चसारतः)

—*—